# भवानीसहस्रनाम



RS. 15=00

15/-

प्रकाशक :- प्रेमनाथ शास्त्री
विजयेश्वर-ज्योतिष-कार्यालय गोलगुजराल ( जम्मू )

प्रिटिंड द्वारा : **स्टार ऑफसेट प्रिटिंग प्रैस,** दिल्ली,. फोन : 7525901

# "ॐ नमो भवान्यै"

ॐ अरि-शंख-कृपाण-खेट-बाणान् । सुधनुः शूलक-तर्जनीं दधाना । भवतां महिषोत्तमाङ्ग संस्था नवदूर्वा-सदृशी श्रियेऽस्तु दुर्गा ।। ॐ शंख-त्रिशूल-शर-चापकरां त्रिनेत्रां तिग्मेतरांशु-कलया विलसत्-किरीटाम् । सिंह-स्थिताम् -असुर-सिद्धनुतां च दुर्गां दूर्वानिभां दुरित-दुःखहरां नमामि (1) ॐ अकुल-कुल-पतंती चक्रमध्ये स्फुरंती मधुर-मधु पिवंती कंटकान्-भक्षयंती । दुरितम्-अपहरंती साधकान्-पोषयन्ती जयति जगति देवी सुन्दरी क्रीडयंती (2) चतु-र्भुजाम्-एकवक्त्रां

पूर्णेन्दु-वदन-प्रभाम् ।खड्गशक्ति- धरां देवीं वरदा-भयपाणिकाम् (3) प्रेत-संस्थां महारौद्रीं भुजगेनो-पवर्तिनीम् । भवानीं कालसंहार-बद्धमुद्रा- विभूषिताम् (4) जगत्-स्थितिकरीं ब्रह्म-विष्णु- रुद्रादिभिः सुरैः । स्तुतां तां परमेशानीं नौम्यहं विघ्न-हारिणीम् (5)

।। ॐ नमो भवान्यै ।।

ॐ कैलास शिखरे रम्ये देवदेवं महेश्वरम् । ध्यानोप-रतमासीनं प्रसन्न-मुखपंकजम् (6) सुरासुर-शिरो-रत्न-रंजितांघ्रि-युगं प्रभुम् । प्रणम्य शिरसा नंदी बद्धांजलिर्-अभाषत (7)

।। श्री नंदिकेश्वर-उवाच ।।

देव-देव जगत्-नाथ संशयोस्ति महान्-मम । रहस्यम्-एकम्-इच्छामि प्रष्टुं त्वां

भक्त-वत्सल (8) देवतायाः-त्वया कस्याः स्तोत्रम्-एतत्-दिवानिशम् । पठ्यते-विरतं नाथ, त्वत्तः किम्-अपरं महत् (9) इति पृष्टः-तदा देवो नंदिकेन जगत्-गुरुः, प्रोवाच-भगवान्-एको विकसन्-नेत्र पंकजः (10)

श्रीभगवन्-उवाच

साधु-साधु गणश्रेष्ठ पृष्टवान्-असि-मां च यत् । स्कंदस्यापि च यत्-गोप्यं रहस्यं कथयामि तत् (11) पुरा कल्पक्षये लोकान् सिसृक्षु-र्मूढ़-चेतसः । गुणत्रय-मयी शक्तिर्-मूल प्रकृति-संज्ञिता (12) तस्याम्-अहं समुत्पन्नः-तत्त्वैर्-तैर्-महदादिभिः । चेतनेति ततः शक्तिर्-मां काप्या-लिंग्य तस्थुषी (13) हेतुः संकल्प-जालस्य मनोधिष्ठायिनी शुभा इच्छेति परमा शक्तिर्-उन्-मिमील ततः परम् (14)

ततो वाक्-इति विख्याता शक्तिः शब्दमयी पुरा । प्रादुर्-आसीत्-जगत्-माता वेदमाता सरस्वती (15) ब्राह्मी च वैष्णवी सैंद्री कौमारी पार्वती शिवा । सिद्धिदा-बुद्धिदा शांता सर्वमंगल-दायिनी (16) तयैतत्-सृज्यते विश्वम्-अनाधारं च धार्यते । तयैतत्-पाल्यते सर्वं तस्याम्-एव प्रलीयते (17) अर्चिता-प्रणता ध्याता सर्व-भाव-विनिश्चितैः । आराधिता स्तुता सैव सर्वसिद्धि-प्रदायिनी (18) तस्या-अनुग्रहात्-एव ताम्- एव स्तुतवान्-अहम् । सहस्रैर्-नामभिर्-दिव्यैः-त्रैलोक्य-प्राणि पूजितैः (19) स्तवेनानेन संतुष्टा माम्-एव प्रविवेश सा । तत्-आरभ्य मया प्राप्तम्-ऐश्वरं पदम्-उत्तमम् (20) तत प्रभावात् मया सृष्टं जगत्-एतत्-चराचरम् । ससुरा-सुर-गंधर्व

यक्षराक्षस-मानवम् (21) सपन्नगं ससमुद्रं
सशैल-वनकाननम् । सराशि-ग्रह-नक्षत्रं
पंच-भूत-गुणान्वितम् (22) नंदि-नाम-सहस्रेण-
स्तवेनानेन सर्वदा । स्तुवे परापरां शक्तिं
ममानुग्रह-कारिणीम् (23) इत्युक्तोप-रतं
देवं चराचर-गुरुं विभुम् । प्रणम्य शिरसा
नंदी प्रोवाच परमेश्वरम् (24)

श्री नंदिकेश्वर उवाच

भगवन्-देव-देवेश लोकनाथ जगत्-पते ।
भक्तोस्मि तव दासोस्मि प्रसादः क्रियतां
मयि (25) देव्याः स्तवम्-इमं पुण्यं
दुर्लभं-यत्-सुरैर्-अपि । श्रोतुम्-इच्छाम्यहं
देव प्रभावम्-अपि चास्य तु (26)

श्री भगवान् उवाच

शृणु नंदिन् महाभाग स्तव-राजम्-इमं

शुभम् । सहस्रैर्-नामभिर्-दिव्यैः सिद्धिदं सुखमोक्षदम् (27) शुचिभिः प्रातर्-उत्थाय पठितव्यं समाहितैः ।। त्रिकालं श्रद्धया युक्तैर्-नातः परतरः स्तवः (28) ॐ अस्य श्रीभवानी-नाम-सहस्र-स्तव-राजस्य श्रीभगवान्-महादेव ऋषिः । अनुष्टुप् छन्दः । आद्या शक्तिः । श्रीभगवती भवानी देवता । ह्रीं बीजम् । श्रीं शक्तिः । क्लीं कीलकम् । श्री भगवती भवानी-सन्तोषनार्थं सकलकामना-सिद्ध्यर्थे पाठे विनियोगः ।

अथ करन्यासः

ॐ एकवीरायै अंगुष्ठाभ्यां नमः

ॐ मायायायै तर्जनीभ्यां नमः

ॐ पार्वत्यै मध्यमाभ्यां नमः ।

ॐ गिरिशप्रियायै अनामिकाभ्यं नमः

ॐ गौर्यै कनिष्ठिकाभ्यां नमः
ॐ करालिन्यै करतल-कर
पृष्ठाभ्यांनमः ।

अथ षड्-अङ्गन्यासः

ॐ एकवीरायै हृदयाय नमः
ॐ महामायायै शिरसे स्वाहा
ॐ पार्वत्यै शिखायै वषट्
ॐ गिरिश प्रियायै कवचाय हुम्,
ॐ गौर्यै नेत्र-त्रयाय वौषट्
ॐ करालिन्यै-अस्त्राय फट्

अथध्यानम्

अर्धेन्दु-मौलिम्-अमलाम्-अमराभिवन्द्याम्
अम्भोज-पाश- सृणि-रक्तकपाल-हस्ताम् ।
रक्तांग-राग- वसनाभरणां त्रिनेत्राम् ध्याये
शिवस्य वनितां मद-विह्वलांगीम् ।

ॐ बालार्क-मण्डलाभासां चतुर्-बाहुं त्रिलोचनाम्। पाशांकुश-शरां चापं धारयंतीं शिवां भजे ।

ॐ श्री ईश्वर उवाच

ॐ महाविद्या, जगत्-माता, महालक्ष्मीः, शिवप्रिया। विष्णु-माया, शुभा, शान्ता, सिद्धा, सिद्ध-सरस्वती (1) क्षमा, कान्तिः प्रभा, ज्योत्स्ना, पार्वती, सर्व-मंगला, हिंगुला, चण्डिका, दान्ता, पद्मा, लक्ष्मीः, हरिप्रिया (2) त्रिपुरा-नन्दिनी, नन्दा, सुनन्दा, सुर-वन्दिता। यज्ञविद्या, महामाया, वेदमाता, सुधाधृतिः (3) प्रीतिप्रिया, प्रसिद्धा, च मृडानी, विन्ध्य-वासिनी । सिद्ध-विद्या, महाशक्तिः, पृथ्वी, नारद-सेविता (4) पुरु-हूत-प्रिया, कान्ता, कामिनी, पद्म-

लोचना । प्रह्लादिनी, महामाता, दुर्गा, दुर्गति-नाशिनी (5) ज्वाला-मुखी, सुगोत्रा, च ज्योतिः, कुमद-हासिनी । दुर्गमा, दुर्लभा, विद्या, स्वर्गतिः, पुरवासिनी (6) अपर्णा, शाम्बरी माया, मदिरा, मृदुहासिनी । कुल-वागीश्वरी, नित्या-नित्य-क्लिन्ना, कृशोदरी (7) कामेश्वरी, च नीला, च भीरुण्डा, वह्निवासिनी । लम्बोदरी, महाकाली, विद्या-विद्येश्वरी, तथा (8) नरेश्वरी, च सत्या, च सर्व-सौभाग्य-वर्धिनी, संकर्षणी, नार-सिंही, वैष्णवी, च महोदरी (9) कात्या-यनी, च चम्पा, च सर्व-सम्पत्ति-कारिणी । नारायणी, महानिद्रा, योगनिद्रा, प्रभावती (10) प्रज्ञा-पारमिता, प्रज्ञा, तारा, मधु-मती, मधु । क्षीणरार्णव-सुता, हाला,

कालिका, सिंह-वाहना (11) ॐकारा, च सुधाकारा, चेतना, कोपना, कृतिः । अर्ध-बिंदु-धरा, धारा, विश्वमाता, कलावती (12 (100) पद्मावती, सुवस्त्रा, च, प्रबुद्धा, च सरस्वती । कुंडासनी, जगत्-दात्री, बुद्धमाता, जिनेश्वरी (13) जिनमाता, जिनेन्द्रा, च शारदा, हंसवाहना । राज्य लक्ष्मीः, वषट्-कारा, सुधाकारा, सुधोत्-सुका (14) राजनीतिः, त्रयीवार्ता, दंडनीतिः, क्रियावती । सत्-भूतिः, तारिणी, श्रद्धा, सत्-गतिः, सत्-परायणा (15) सिंधुः, मंदाकिनी, गंगा, यमुना, च सरस्वती । गोदावरी, विपाशा, च कावेरी, च शतद्रुदा (16) सरयूः, चन्द्रभागा, च कौशिकी, गण्डकी, शुचिः । नर्मदा कर्मनाशा, च

चर्मण्वत्यथ, देविका (17) वेत्रवती, वितस्ता च वरदा, नर-वाहना, सती, पतिव्रता, साध्वी, सुचक्षुः, कुण्ड-वासिनी (18) एक चक्षुः, सहस्राक्षी, सुश्रेणिः, भग-मालिनी, सेना-श्रेणिः, पताका, च सुव्यूहा, युद्ध-कांक्षिणी (19) पताकिनी, दया, रंभा, विपंची, पंचम-प्रिया । परापरकला-कांता, त्रिशक्तिः, मोक्ष-दायिनी (20) ऐंद्री, माहेश्वरी, ब्राह्मी, कौमारी, कुलवासिनी इच्छा, भगवती, शक्तिः कामधेनुः कृपावती (21) वज्रायुधा, वज्रहस्ता, चण्डी, चण्ड-पराक्रमा, गौरी, सुवर्णवर्णा, च स्थिति-संहार-कारिणी (22) एकानेका, महेज्या, च शतबाहुः, महाभुजा । भुजंग-भूषणा, भूषा, षट्चक्र-क्रम-वासिनी (23) षट्चक्र- भेदिनी, श्यामा, कायस्था, काय-वर्जिता । सुस्मिता

सुमुखी, क्षामा, मूल – प्रकृतिः, ईश्वरी (24) (200) अजा, च बहुवर्णा, च पुरुषार्थ-प्रवर्तिनी। रक्ता, नीला, सिता, श्यामा, कृष्णा, पीता, च कर्बुरा (25) क्षुधा, तृष्णा, जरा, वृद्धा, तरुणी, करुणालया। कला, काष्ठा, मुहूर्ता, च निमेषा, काल-रूपिणी (26) सुवर्ण-रसना-नासा, चक्षुः स्पर्शवती, रसा। गन्धप्रिया, सुगन्धा, च सुस्पर्शा, च मनोगतिः (27) मृग-नाभिः, मृगाक्षी, च कर्पूरा-मोद-धारिणी। पद्म-योनि, सुकेशी, च सुलिंगा, भगरूपिनी (28) योनि-मुद्रा, महामुद्रा, खेचरी, खग-गामिनी। मधुश्रीः, माधवी-वल्ली, मधु-मत्ता, मदोद्धता (29) मातङ्गी, शुक-हस्ता, च पुष्पबाणा, इक्षुचापिनी। रक्तांबर-धरा, क्षीबा,

रक्त-पुष्पा-वतंसिनी (30) शुभ्रा-म्बरधरा, धीरा, महाश्वेता, वसु-प्रिया । सुवेणी, पद्महस्ता च, मुक्ताहार- विभूषणा (31) कर्पूरा -मोद-निश्वासा, पद्मिनी, पद्म-मन्दिरा । खड्गिनी, चक्र-हस्ता, च भुशुण्डी, परिघायुधा (32) चापिनी, पाशहस्ता, च त्रिशूल-वर-धारिणी । सुबाणा, शक्ति-हस्ता, च मयूर -वरवाहना (33) वरायुध-धरा, वीरा, वीर-पान- मदोत्कटा । वसुधा, वसुधारा, च जया, शाकम्भरी, शिवा (34) विजया, च जयंती, च सुस्तनी, शत्रु-नाशिनी । अन्तर्वत्नीं वेद-शक्तिः वरदा, वर-धारिणी (35) शीतला, च सुशीला, च बाल-ग्रह-विनाशिनी । कौमारी, च सुपर्वा, च कामाख्या, काम-वन्दिता (36) जालान्धर-धरा, ऽनन्ता, कामरूप-

निवासिनी । काम-बीज-वती-सत्या, सत्यधर्म-परायणा (37) स्थूल-मार्ग-स्थिता (300) सूक्ष्मा, सूक्ष्मबुद्धि-प्रबोधिनी, षट्-कोणा, च त्रिकोणा, च त्रिनेत्रा, त्रिपुर-सुन्दरी (38) वृषप्रिया, वृषारूढा, महिषा-सुर-घातिनी । शंभु-दर्पहरा दीप्ता, दीप्त-पावक-सन्निभा (39) कपाल- भूषणा, काली, कपाल-माल-धारिणी । कपाल-कुण्डला, दीर्घा, शिवदूती घन-ध्वनिः (40) सिद्धिदा, बुद्धिदा, नित्या, सत्यमार्ग-प्रबोधिनी । कम्बु-ग्रीवा, वसुमती, छत्र-छाया-कृतालया (41) जगत्-गर्भा, कुण्डलिनी, भुजगाकार-शायिनी । प्रोल्लसत्-सप्तपद्मा, च नाभिनाल-मृणालिनी (42) मूलाधारा, निराकारा, वह्निकुण्ड-कृतालया, वायुकुण्ड-सुखासीना,

निराधारा, निराश्रया (43)
श्वासोत्-श्वास-गतिः, जीवा-ग्राहिणी,
वह्नि-संश्रया। वल्ली-तंतु-समुत्थाना,
षड्-रसा-स्वाद-लोलुपा (44) तपस्विनी,
तपः सिद्धिः, तपसा-सिद्धि-दायिनी।
तपो-निष्ठा, तपो-युक्ता, तापसी, च तपः
प्रिया (45) सप्तधातु-मयी, मूर्तिः,
सप्तधात्वंतरा-श्रया, देहपुष्टिः, मनः पुष्टिः
अन्नपुष्टिः, बलोद्धता (46) ओषधिः,
वैद्यमाता, च, द्रव्य-शक्तिः, प्रभाविनी।
वैद्या, वैद्य-चिकित्सा, च सुपथ्या, रोग-
नाशिनी (47) मृगया, मृगमांसादा, मृगत्वक्,
मृगलोचना। वागुरा, बंधरूपा, च वधरूपा,
वधोद्धता (48) बंदी, बंदिस्तुता, कारा,
कारा-बंधविमोचिनी। शृंखला, खलहा,

विद्या, दृढबन्ध-विमोचिनी (49) अम्बिका, अम्बालिका, चाम्बा, स्वक्षा, साधुज-नार्चिता । कौलिकी कुलविद्या, सुकुला, कुल-पूजिता (50) कालचक्र-भ्रमा, भ्रान्ता, विभ्रमा भ्रम-नाशिनी । वात्याली, मेघमाला, च सुवृष्टिः, सस्य-वर्धिनी (51) अकारा, च इकारा, च (400) उकारा, ऐकार-रुपिणी । ह्रींकारी, बीजरूपा, च क्लींकारां-बरवासिनी (52) सर्वाक्षर-मयी-मूर्तिः, अक्षरा, वर्णमालिनी । सिन्दूरा-रुणवर्णा, च सिन्दूर-तिलक-प्रिया (53) वश्या, च वश्यबीजा, लोक-वश्य-विभावनी नृपवश्या, नृपसेव्या, नृपवश्यकरी, प्रिया (54) महिषी नृपमान्या, च नृमान्या नृपनन्दिनी, नृपधर्म-मयी, धन्या, धन-धान्य-विवर्धिनी (55) चतुर्वर्ण-मयी-

मूर्तिः, चतुर्वर्णैः-सुपूजिता। सर्व-धर्म-मयीसिद्धिः, चतुराश्रम-वासिनी (56) ब्राह्मणी, क्षत्रिया, वैश्या, शूद्रा, चा-वर-वर्णजा। वेदमार्ग-रता, यज्ञा, वेद-विश्व-विभाविनी (57) अस्त्र-शस्त्रमयी-विद्या, वर-शस्त्रास्त्र-धारिणी। सुमेधा, सत्यमेधा, च भद्रकाली, अपराजिता (58) गायत्री, सत्-कृतिः, संध्या, सावित्री, त्रिपदा-श्रया। त्रिसंध्या, त्रिपदी, धात्री, सुर्पवा, साम-गायनी (59) पांचाली, बालिका बाला, बाल-क्रीड़ा, सनातनी। गर्भाधार-धरा, शून्या, गर्भ-शय-निवासिनी (60) सुरारिघातिनी, कृत्या, पूतना, च तिलोत्तमा। लज्जा, रसवती, नंदा, भवानी, पापनाशिनी (61) पट्टांबर-धरा, गीतिः, सुगीतिः, ज्ञान-लोचना।

सप्त-स्वरमयी, तन्त्री, षड्-ज-मध्यम-दैवता (62) मूर्छाना, ग्रामसंस्थाना, स्वच्छ-स्वस्थान-वासिनी । अट्टाट्ट-हासिनी, प्रेता, प्रेतासन-निवासिनी (63) गीत-नृत्य-प्रिया, कामा, तुष्टिदा, पुष्टिदा-क्षया । निष्ठा, सत्य-प्रिया, प्रज्ञा, लोकेशी, च सुरोत्तमा (64) सुविषा, ज्वालिनी, ज्वाला, विश्व-मोहार्ति-नाशिनी । विषारिः, नाग-दमनी, कुरु-कुल्ला-अमृतोद्भवा (65) भूत-भीतिहरा, रक्षा (500) भूता-वेश-विनाशिनी । रक्षोघ्नी, राक्षसी, रात्रिः, दीर्घ-निद्रा-निवारिणी (66) चन्द्रिका, चन्द्रकातिः, च सूर्यकांतिः, निशाचरी । डाकिनी, शाकिनी, शिष्या, हाकिनी, चक्रवाकिनी (67) सितासित-प्रिया, स्वंगा,

सकला, वनदेवता। गुरु-रूपधरा, गुर्वी, मृत्यु-मारी, विशारदा (68) महामारी, विनिन्द्रा, च तंद्रा, मृत्युविना-शिनी, चन्द्रमण्डल-संकाशा, चन्द्रमंडल-वासिनी (69) अणिमादि-गुणोपेता, सुस्पृहा, काम-रूपिणी, अष्टसिद्धिप्रदा, प्रौढा, दुष्टदानव-घातिनी (70) अनादिनिधना, पुष्टिः, चतुर्बाहुः, चतुर्मुखी। चतुः समुद्र-शयना, चतु-वर्ग-फलप्रदा (71) काशपुष्प-प्रतीकाशा, शरत्-कुमुद लोचना। भूता, भव्या, भविष्या, च शैलजा, शैल- वासिनी (72) वाममार्ग-रता, वामा, शिव-वामाङ्ग-वासिनी। वामाचार-प्रिया, तुष्टिः लोपामुद्रा-प्रबोधिनी (73) भूतात्मा, परमात्मा च, भूत-भव्य-विभाविनी। मंगला, च

सुशीला, च परमार्थ प्रबोधिनी (74) दक्षिणा, दक्षिणा-मूर्तिः, सुदीक्षा, च हरि-प्रसूः । योगिनी, योग – युक्ता, च योगाङ्गा, ध्यान-शालिनी (75) योग-पट्टधरा, मुक्ता, मुक्तानां-परमागतिः । नारसिंही, सजन्मा, च त्रिवर्ग-फल-दायिनी (76) धर्मदा, धनदा, चैका, कामदा, मोक्षदा, द्युतिः । साक्षिणी, क्षणदा, दक्षा, मोक्षदा, कोटि-रूपिणी (77) क्रतुः कात्यायिनी, स्वच्छा, स्वच्छन्दा, च कवि-प्रिया । सत्यागमा, बहिस्था, च काव्य-शक्तिः, कवि-त्वदा (78) मीना-पुत्री, सती, माता, मैनाक-भगिनी, तडित् । सौदामिनी, (600) सुदामा, च सुदामा धाम-शालिनी (79) सौभाग्य-दायिनी, द्यौश्च, सुभगा, द्युति-वर्धिनी । श्रीकृत्तिवसना, चैव

कंकाली, कलिनाशिनी (80)
रक्तबीज-वधोदृप्ता, सुतन्तुः, बीजसन्ततिः ।
जगत्-जीवा, जगत्-बीजा, जगत्-त्रय-
हितैषिणी (81) चामीकर-रुचिः, चान्द्री,
साक्षया, षोडशीकला, यत्-तत्-पदानु-
बन्धा, च यक्षिणी, धनदार्जिता (82)
चित्रिणी, चित्रमाया, च विचित्रा,
भुवनेश्वरी । चामुण्डा, मुण्ड-हस्ता,
चण्डमुण्डवधोद्धरा (83)अष्टमी,
एकादशी, पूर्णा, नवमी, च चतुर्दशी ।
अमा-कलशहस्ता, च पूर्णकुम्भ-
पयोधरा (84) अभीरुः, भैरवी, भीरुः, भीमा,
त्रिपुर-भैरवी, महारुण्डा, च रौद्री, च महा
भैरवपूजिता (85) निर्मुण्डा, हस्तिनी, चण्डा,
कराल-दशनानना। कराला, विकराला, च

घोरा घुर्घुर-नादिनी (86) रक्तदन्ता, ऊर्ध्वकेशी, च बन्धूक-कुसुमा-रुणा । कादम्बरी, पटासा, च काश्मीरी, कुंकुम-प्रिया (87) क्षान्तिः, बहु-सुवर्णा, च मतिः, बहु-सुवर्णदा । मातंगिनी, वरारोहा, मत्त-मातंग-गामिनी (88) हंसा, हंसगतिः, हंसी, हंसोज्ज्वल-शिरोरुहा, पूर्ण-चन्द्रमुखी, श्यामा स्मितास्या, श्याम-कुन्तला (89) मषी, च लेखनी, लेखा, सुलेखा, लेखक-प्रिया । शंखिनी, शंख-हस्ता, च जलस्था, जलदेवता (90) कुरुक्षेत्रावनिः, काशी, मथुरा, काञ्ची, अवन्तिका । अयोध्या, द्वारिका, माया, तीर्था, तीर्थ-कर प्रिया (91) त्रिपुष्करा, —अप्रमेया, च कोशस्था, कौशवासिनी (700) कौशिकी, तु कुशावर्ती,

कौशाम्बी, कोश-वर्धिनी (92) कोशदा, पद्मकोशाक्षी, कुसुम्भ-कुसुम-प्रिया। तोतुला, च तुला कोटि, कोटिस्था, कोटरा-श्रया (93) स्वयंभूः, च सुगुप्ता, च सुरूपा, रूपवर्धिनी। तेजस्विनी, सुभिक्षा, च बलदा, बलदायिनी (94) महाकोशी, महावार्ता, बुद्धिः सत्-असदात्मिका। महाग्रह-हरा, सौम्या, विशोका, शोक-नाशिनी (95) सात्त्विकी, सत्व-संस्था, च राजसी, च रजोवृता। तामसी, च तमोयुक्ता, गुण-त्रय-विभाविनी (96) अव्यक्ता, व्यक्तरूपा, च वेद विद्या, च शाम्भवी। शंकरा-कल्पिनी, कल्पा, मन संकल्प-संततिः (97) सर्वलोकमयी, शक्तिः सर्व-श्रवण-गोचरा। सर्व-ज्ञानवती, वाँछा, सर्व-तत्वाव-बोधिनी (98) जागृतिः, च

सुषुप्तिः, च, स्वप्नावस्था, तुरीयका, त्वरा, मन्दगतिः, मन्दा, मदिरा-मोद-धारिणी । पानभूमिः, पानपात्रा, पानदान-करोद्यता । अघूर्णा——रुण——नेत्रा, च किंचित्-अव्यक्त-भाषिणी (100) आशापूरा, च, दीक्षा च, दक्षा दीक्षित पूजिता । नागवल्ली, नागकन्या, भोगिनी, भोग-वल्लभा (101) सर्व-शास्त्रमयी, विद्या, सुस्मृतिः, धर्म-वादिनी । श्रुतिः, स्मृतिधरा, ज्येष्ठा, श्रेष्ठा, पाताल-वासिनी (2) मीमांसा, तर्कविद्या, च सुभक्तिः, भक्त-वत्सला । सुनाभिः, यातना, जातिः, गम्भीराऽभाव-वर्जिता (3) नाग-पाशधरा, मूर्तिः, अगाधा, नाग-कुण्डला । सुचक्रा, चक्र-मध्यस्था, चक्रकोण-निवासिनी (4) सर्व-मन्त्रमयी, विद्या,

सर्व-मन्त्राक्षरा-वलिः। मधु-स्रवा, स्रवन्ती, च, भ्रामरी, भ्रमरा-लका, मातृ-मण्डल-मध्यस्था, मातृमण्डल-वासिनी। कुमार-जननी क्रूरा, सुमुखी, ज्वर-नाशिनी (6) अतीता, विद्यमाना, च भाविनी, प्रीतिमंजरी (800) सर्व-सौख्यवती युक्तिः, आहार-परिणामिनी (7) निधाना-पंच-भूतानां, भव-सागर-तारिणी अक्रूरा, च ग्रहवती, विग्रहा, ग्रहवर्जिता (8) रोहिणी, भूमि-गर्भा-च, कालभूः, काल-वर्तिनी। कलंक-रहिता, नारी, चतुः-षष्ट्य-मिधावती (9) जीर्णा, च जीर्णवस्त्रा, च नूतना, नव-वल्लभा। अजरा, च, रतिः, प्रीतिः, अतिराग-विवर्धिनी (10) पंच-वातगति-र्भिन्ना, पंचश्लेष्मा-शयाधरा,

पंच-पित्तावती-शक्तिः, पंच-स्थान-विभावनी (11) उदक्या, च वृषस्यंती, बहिः प्रस्र-विणी त्र्यहा। रजः शुक्र-धरा-शक्तिः, जरायुः-गर्भधारिणी (12) त्रिकालज्ञा, त्रिलिंगा, त्रिमूर्तिः, त्रिपुर-वासिनी। अरागा, शिवतत्वाच, काम-तत्वानु-रागिणी (13) प्राची, अवाची, प्रतीची-दिक्, उदीची-दिक्, विदिक्-दिशा। अहंकृतिः, अहंकारा, बालमाया, बलिप्रिया (14) स्रुक्-स्रुवा, सामिधेनी च, सुश्रद्धा, श्राद्ध-देवता। माता, मातामही, तृप्तिः, पितृमाता, पितामही (15) स्नुषा, दौहित्रिणी, पुत्री, पौत्री, नप्त्री शिशु-प्रिया। स्तनदा, स्तनधारा, च विश्व-योनिः, स्तनंधयी (16) शिशूत्संग-धरा, दोला, दोला-क्रीड़ा-भिनन्दिनी। उर्वशी, कदली,

केका, विशिखा, शिखि-वर्तिनी (17) खट्वांग-धारिणी, खट्वा, बाण-पुंखानु-वर्तिनी। लक्ष्य-प्राप्तिः, करा-लक्ष्या, लक्ष्या, च शुभलक्षणा (18) वर्तिनी, सुपथा-चारा, परि-खा, च खनिर्वृतिः। प्राकार-वलया, वेला, मर्यादा च महोदधौ (19) पोषणी, शोषणी शक्तिः, दीर्घ-केशी, सुलोमशा। ललिता, मांसला, तन्वी (900) वेद-वेदांगधारिणी (20) नरासृक्-पानमत्ता, च नर-मुण्डास्थि-भूषणा। अक्ष-क्रीड़ा-रतिः शारी, शारिका, शुक-भाषिणी (21) शांबरी, गारुडी-विद्या, वारुणी, वरुणार्चिता। वाराही, तुण्ड-हस्ता, च दंष्ट्रोद्धृत-वसुन्धरा (22) मीन-मूर्ति-धरा, मूर्ता, वदान्या, प्रतिमा-श्रया। अष्टमूर्तिः, निधीशाः, च

शालिग्राम-शिला, शुचिः (23) स्मृतिः,
संस्कार-रूपा च, सुसंस्कारा च संस्कृतिः।
प्राकृता, देशभाषा च गाथा, गीतिः,
प्रहेलिका (26) इडा, च पिंगला, पिंगा
सुषम्णा, सूर्य-वाहिनी। शशि-स्रवा, च
तालुस्था, काकिनी, मृत-जीवनी (25)
अणुरूपा, बृहत्-रूपा, लघु-रूपा, गुरु-स्थिरा,
स्थावरा, जंगमा-देवी, कृत-कर्म-फलप्रदा(26)
विषया-क्रान्त देहा च निर्विशेषा, जितेन्द्रिया,
विश्वरूपा, चिदानन्दा, परंब्रह्म-प्रबोधिनी(27)
निर्विकारा, च निर्वैरा, विरतिः, सत्य-
वर्धिनी। पुरुषाज्ञा, च भिन्ना, च क्षान्तिः,
कैवल्य-दायिनी (28) विविक्त-सेविनी, प्रज्ञा,
जनयित्री, बहुश्रुतिः। निरीहा, च समस्तैका,
सर्व-लोकैक-सेविता (29) सेवा, सेवा-प्रिया,

सेव्या सेवा-फल-विवर्धिनी ।
कलौ-कल्कि-प्रिया, काली, दुष्ट-म्लेच्छ-
विनाशिनी (30) प्रत्यंचा, च धनुर्-यष्टिः,
खड्गधारा, दुरानतिः । अश्वप्लुतिः, च
वल्गा, च सृणिः, सन्मत्त-वारुणा (31)
वीरभूः, वीरमाता च, वीरसूः, वीर-नन्दिनी ।
जयश्रीः, जयदीक्षा च जयस्था,
जयवर्धिनी (32) सौभाग्य-सुभगाकारा,
सर्व-सौभाग्य-वर्धिनी, क्षेमंकरी, सिद्धिरूपा,
सत्कीर्तिः, पथिदेवता (33) सर्व-तीर्थमयी-मूर्तिः,
सर्वदेवमयी- प्रभा, सर्वसिद्धि-प्रदा-शक्तिः
सर्वमंगल-मगंला (34) (1000) ॥

पुण्यं सहस्र-नामेदम्-अम्बायाःरुद्र-भाषितम् । चतु-र्वर्ग प्रदं सत्यं नन्दिकेन प्रकाशितम् । नातः परतरो मन्त्रो नातः परतरः स्तवः । नातः परतरा-विद्या तीर्थं नातः परं परम् । ते धन्याः कृत-पुण्यास्ते त एव भुवि पूजिताः, एक भावं मुदा नित्यं येर्चयन्ति महेश्वरीम्-देवतानां देवताया बृह्माद्यै-र्या च पूजिता, भूयात् सा वरदा लोके साधूनां विश्व-मंगला । एताम्-एव पुराराध्य विद्यां त्रिपुर-भैरवीम्, त्रैलोक्य-मोहनं रूपम्-अकार्षीत् भगवान्-हरिः

इति श्री रुद्रयामले तन्त्रे शिव-नन्दिकेश्वर संवादे भवानी

सहस्र-नामावली सम्पूर्णा

# अथ इन्द्राक्षी-स्तोत्रम्

ॐ अस्य श्री इन्द्राक्षी स्तोत्र-मन्त्रस्य पुरन्दर ऋषिः, अनुष्टुप् छन्दः, श्री इन्द्राक्षी भगवती देवता, भुवनेश्वरी शक्तिः, माहेश्वरी कीलकं, गायत्री, सावित्री सरस्वती कवचं आत्मनो-वाङ्मनः-कायो-पार्जित-पाप-निवारणार्थं सर्व-कामना-सिद्ध्यर्थे पाठे विनियोगः । लक्ष्म्यै अंगुष्ठाभ्यां नमः, भुवनेश्वर्यै तर्जनीभ्यां नमः, माहेश्वर्यै मध्यमाभ्यां नमः, वज्रहस्तायै अनामि-काभ्यां नमः, सहस्र-नयनायै कनिष्ठिका-भ्यां नमः, इन्द्राक्षी-भगवत्यै करतल-कर-पृष्ठाभ्यां नमः । इति करन्यासः ।

अथ षडंगन्यासः । लक्ष्म्यै हृदयाय नमः, भुवनेश्वर्यै शिरसे स्वाहा, माहेश्वर्यै शिखायै वषट्, वज्रहस्तायै कवचाय हुं, सहस्र-नयनायै नेत्राभ्यां वौषट्, इन्द्राक्षी-भगवत्यै-अस्त्राय फट् ।। प्राणायामः ।।

ध्यानम्ः

ॐ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्र-धरां शुभाम् । वामे वज्र-धरां सव्य-हस्तेऽभय प्रदाम् । सहस्र-नेत्रां सूर्याभां नानालंकार-भूषिताम् । प्रसन्नवदनां नित्याम्-अप्सरो-गण-सेविताम् । श्री दुर्गा सौम्य वदनां पाशां-कुशधरां पराम् । त्रैलोक्य-मोहिनीं देवीं भवानीं प्रणमाम्यहम् ।

इन्द्र उवाच

इन्द्राक्षी नाम सा देवी दैवतैः समुदाहृता । गौरी, शांकभरी देवी दुर्गा-नाम्नेति-विश्रुता (1) कात्यायनी महादेवी चन्द्र-घंटा-महा तपा । गायत्री सा च सावित्री ब्रह्मा-णी ब्रह्म-वादिनी (2) नारायणी भद्रकाली रुद्राणी कृष्णपिंगला । अग्नि-ज्वाला रौद्र-मुखी कालरात्रि-स्तपस्विनी (3) मेघश्यामा सहस्राक्षी विष्णु-माया जलोदरी । महोदरी मुक्त-केशी घोर-रूपा महाबला (4) आनंदा भद्रजानंदा,रोग-हन्त्री शिव-प्रिया । शिव-दूती

करालो च प्रत्यक्षा परमेश्वरी(5) इन्द्राणी चन्द्ररूपा च इन्द्र-शक्ति-परायणा । महिषा-सुर-संहर्त्री चामुंडा गर्भ-देवता (6) वाराही नारसिंही च भीमा भैरव-नादिनी । श्रुतिः स्मृति-र्धृति-र्मेधा विद्या लक्ष्मीः सर-स्वती (7) आनंदा विजया पूर्णा मनस्तोषा-पराजिता । भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा (8) शिवा भवानी रुद्राणी शंकरार्ध-शरीरिणी ।।

एतै-नामपदै-र्दिव्यैः स्तुता शक्रेण धीमता । आयुर्-आरोग्यम्-ऐश्वर्या-ऽक्षय-सम्पत्ति कारकम् । क्षया-पस्मार-कुष्ठादि-ताप-ज्वर – निवारकम् । शतम्-आवर्तयित्-यस्तु मुच्यते व्याधि-बन्धनात् । आवर्तयित् सहस्रेण लभते वांछितं फलम् । राजा वशम्-आवप्नोति सत्यम्-एवन्-संशयः । लक्षम्-एकं जपेत्-यस्तु साक्षात् देवीं स पश्यति । त्रिकालं पठते नित्यं धनधान्यं च सम्पदः । अर्धरात्रे पठेत्-नित्यं मुच्यते व्याधि-बन्धनात्-ऐन्द्र स्तोत्रम्-इदं पुण्यं जपेतु फलवर्धनम् । विनाशाय तु रोगाणाम्-अप-मृत्यु-हराय च । राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम् । इच्छाकामं-तुकामार्थी धर्मार्थी धर्मम्-अव्ययम् । विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम् । इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः ।

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी
मातंगी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शंकर-वल्लभा त्रिनयना वाक्-वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारी-त्यसि ।।

अनेन मन्त्रपाठेन आत्मनो वांगमनः कायोपार्जित-पाप-निवारणार्थं श्री इष्ट-देवी-प्रीत्य-र्थं भगवती अमा कामा चार्वंगो टंक-धारिणी तारा पार्वती यक्षिणी श्रीशारिका-भगवती श्री शादरा-भगवती श्री महाराज्ञा भगवती श्रीज्वाला भगवती व्रीडाभगवती वैखरी-भगवती वितस्ता भगवती गंगा-भगवती यमुनाभगवती-कालिका-भगवती सिद्ध-लक्ष्मीः महालक्ष्मीः महात्रिपुर-सुन्दरी सहस्रनाम्नी देवी भवानी सपरि-वारा सवाहना सायुधा सांगा प्रीयतां प्रीतास्तु ।

इति इन्द्राक्षी स्तोत्रं सम्पूर्णम् ।

असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमय ।।

# क्षमा-प्रार्थना

अपराध-सहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयम्-इति मां मत्वा क्षमस्व परमेश्वरि ।1।
आवा-हनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ।2।
मन्त्रहीनं क्रिया-हीनं भक्ति-हीनं सुरेश्वरि ।
यत्-पूजितं मया देवि परिपूर्णं तत्-अस्तु मे ।3।
अपराध-शतं कृत्वा जगत्-अम्बेति चोच्चरेत्
यां गतिंसम्-अवाप्नोति न तां ब्रह्मदयः सुराः ।4।
सापराधोऽस्मि शरणं प्राप्तः त्वां जगत्-अम्बिके ।
इदानीम्-अनुकम्प्यो-हं यथेच्छसि तथा कुरु ।5।
अज्ञानात्-विस्मृते-र्भ्रान्त्या यत्-न्यूनम्-अधिकं कृतम् ।
तत्-सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ।6।
कामेश्वरि जगत्-मातः सत्-चित्-आनन्द-विग्रहे ।
गृहाण-अर्चाम्-इमां प्रीत्या प्रसीद परमेश्वरि ।7।
गुह्याति-गुह्य-गोप्त्री त्वं गृहाणा-स्मत्-कृतं जपम् ।
सिद्धि-र्भवतु मे देवि त्वत्-प्रसादात्-सुरेश्वरि ।8।

## "अथ देवी-अपराध-क्षमापनस्तोत्रम्"

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिम्-अहो
न चा-ह्वानं ध्यानं तद्-अपि च न जाने स्तुति-कथा ।
न जाने मुद्रा-स्ते तत्-अपि न जाने विलपनं
परं जाने मातः त्वत्-अनुसरणं क्लेश हरणम् ।1।

विधिर्-अज्ञानेन द्रविण-विरहेणा-लसतया
विधेया-शक्य-त्वात्-तव चरणयो-र्या-च्युतिर्-अभूत ।
तत्-एतत् क्षन्तव्यं जननि सकलो-द्धारिणि शिवे
कुपुत्रो जायेत क्वचित्-अपि कुमाता न भवति ।2।
पृथिव्यां पुत्राः-ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरल-तरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः सम्-उचितम्-इदं नो तव शिवे
कुपुतो जायेत क्वचित्-अपि कुमाता न भवति ।3।
जगत्-मातर्मातः-तव चरण-सेवा न रचिता
न वा-दतं देवि द्रविणम्-अपि भूयः-तव मया ।
तथापि त्वं स्नेहं मयि निर्-उपमं यत्-प्रकुरुषे
कुपुत्रो जायेत क्वचित्-अपि कुमाता न भवति ।4।
परित्यक्ता देवा विविध-विध-सेवा-कुलतया
मया पंचाशीतेर्-अधिकम्-अपनीते तु वयसि ।
इदांनी चेत्-मातः-तव यदि कृपा नापि भविता
निरालम्बो लम्बोदर-जननि कं यामि शरणम् ।5।
श्वपाको जल्पाको भवति मधु-पाको-पमगिरा
निरा-तंको रंको विहरति चिरं कोटि-कनकैः ।

तवापर्णे कर्णे विशति मनु-वर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ ।6।
चित्ता-भस्मा-लेपो गरलम्-अशनं दिक्-पटधरो
जटाधारी कण्ठे भुजग-पति-हारी पशुपतिः ।
कपाली भूतेशो भजति जगत्-ईशैक-पदवीं
भवानि त्वत्-पाणिग्रहण-परिपाटी-फलम्-इदम् ।7।
न मोक्षस्या-कांक्षा भव-विभव-वांच्छापि न पुनः
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः ।8।
नारा-धितासि विधिना विविधोप-चारैः
किं रूक्ष-चिन्तनपरै-र्न कृतं वचोभिः ।
श्यामे त्वम्-एव यदि किंचन मय्यनाथे
धत्से कृपाम्-उ-चितम्-अम्ब परं तवैव ।9।
आपत्सु मग्नः स्मरणं त्वदीयं
करोमि दुर्गे करुणा-र्णवेशि ।
नैतत्-शठत्वं मम भावयेथाः
क्षुधा-तृषार्ता जननीं स्मरन्ति ।10।
जगत्-अम्ब विचित्रम्-अत्र किं
परिपूर्णा करुणास्ति चेत्-मयि

अपराध-परम्परा-परं
नहि माता समुपेक्षते सुतम् ।11।
मत्-समः पातकी नास्ति पापघ्नी त्वत्-समा-नहि
एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ।12।

अर्थ 10, 11, 12 वें श्लोक का निम्नलिखित है ।

हे माता ! मैं आपदाओं में डूब कर आज जो तुम्हारा स्मरण करता हूँ ( पहले कभी नही किया ) इस को मेरी शठता न मानना, क्योंकि भूख-प्यास से पीड़ित बालक माता का ही स्मरण करते हैं ।। 10 ।।

हे माता ! मुझपर जो तुम्हारी पूर्णकृपा बनी है यह आश्चर्य की कौन सी बात है, पुत्र-अपराध-पर-अपराध क्यों न करता जाये फिर भी माता उस पुत्र को छोड़ती नही है ।

हे महादेवि ! मेरे समान कोई पापी नही है और तुम्हारे समान दूसरी कोई पाप-हारिणी नही है ऐसा जानकर जो उचित जान पडे वह कीजिये ।

## अथ तन्त्रोक्तं देवीसूक्तम्

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् । 1 ।
रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः । 2 ।
कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कुर्मो नमो नमः ।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः । 3 ।

दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः । 4 ।
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः । 5 ।
या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 6 ।
या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 7 ।
या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 8 ।
या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 9 ।
या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 10 ।
या देवी सर्वभूतेषु-च्छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 11 ।
या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 12 ।
या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 13 ।

या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 14 ।
या देवी सर्वभूतेषु जातिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 15 ।
या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 16 ।
या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 17 ।
या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 18 ।
या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 19 ।
या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 20 ।
या देवी सर्वभूतेषु वृत्तिरूपेणरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 21 ।
या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 22 ।
या देवी सर्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 23 ।

या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 24 ।
या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 25 ।
या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 26 ।
इन्द्रियाणाम्-अधिष्ठात्री भूतानां चाखिलेषु या ।
भूतेषु सततं तस्यै व्याप्तिदेव्यै नमो नमः । 27 ।
चितिरूपेण या कृत्स्नम -एतत् व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः । 28 ।
स्तुता सुरैः पूर्वमभीष्ट-संश्रया-
-त्तथा सुरेन्द्रेण दिनेषु सेविता ।
करोतु सा नः शुभ-हेतुर्-ईश्वरी
शुभानि भद्राण्यभिहन्तु चापदः । 29 ।
या साम्प्रतं चोद्धतदै-त्यतापितैः-
अस्माभिरीशा च सुरैर्नमस्यते ।
या च स्मृता तत्क्षणमेव हन्ति नः
सर्वापदो भक्ति-विनम्रमूर्तिभिः । 30 ।

# दुर्गा-द्वात्रिंशत्-नाममाला

दुर्गा, दुर्गार्ति-शमनी, दुर्गापत्-विनिवारिणी ।
दुर्गम-च्छेदिनी, दुर्ग-साधिनी, दुर्ग-नाशिनी ।।
दुर्गतो-द्धारिणी, दुर्ग-निहन्त्री, दुर्गमापहा ।
दुर्गम-ज्ञानदा, दुर्ग-दैत्यलोक-दवानला,
दुर्गमा, दुर्गमालोका, दुर्गमात्म-स्वरूपिणी ।
दुर्ग-मार्ग-प्रदा, दुर्गम-विद्या, दुर्गमा-श्रिता ।।
दुर्गम-ज्ञान-संस्थाना, दुर्गमध्यान-भासिनी ।
दुर्गमोहा दुर्गम-गा, दुर्गमार्थ-स्वरूपिणी ।।
दुर्गमासुर-संहत्री, दुर्गमायुध-धारिणी ।
दुर्गमांगी, दुर्गमता, दुर्गम्या दुर्गमेश्वरी ।।
दुर्गभीमा, दुर्गभामा, दुर्गभा, दुर्गदारिणी ।
नामा-वलिम्-इमां यस्तु दुर्गाया मम मानवः ।।
पठेत् सर्वभयात् मुक्तो भविष्यति न संशयः ।।

# देवी-ध्यान-स्तुतिः

भक्तानु-ग्रहकारिणी भगवती, देवाधि-देवीश्वरी
दीनानाथ-कृपावती स्वजननी, भक्तानु-रक्ता सती ।
ॐकाराक्षर-वासिनी सुरनुता, सर्वेश्वरी सर्वदा
भूयात्-नो वरदा सदाऽह्यभयदा, कामेश्वरी कामदा (1)

माता भवानी, च पिता भवानी, बन्धु भवानी च गुरु भवानी
विद्या भवानी द्रविणं भवानी, यतो यतो यामि ततो
भवानी (2)

या माया मधुकैटभ-प्रमथिनी, या माहिषोन्मूलिनी
या धूम्रे-क्षण-चण्ड-मुण्ड-मथिनी, या रक्त-बीजाशनी ।
शक्तिः शुम्भ-निशुभ-दैत्यदलनी, या सिद्धलक्ष्मीः परा
सा देवी नव-कोटि-मूर्ति-सहिता मां पातु माहेश्वरी (3)
बीजैः सप्तभिर्-उज्जवला-कृतिर्-असौ, या सप्त-सप्ति-द्युतिः।
सप्तर्षि-प्रणतांघ्रि-पंकज-युगा, या सप्त-लोकार्ति-हृत
काश्मीर-प्रवरेश-मध्य-नगरे-प्रद्युम्न-पीठे स्थिता,
देवी-सप्तक-संयुता-भगवती श्री शरिका पातु नः (4)
भक्तानां सिद्धि-दात्री नलिन-युग करा, श्वेत-पद्मा-सनस्था,
लक्ष्मीरूपा त्रिनेत्रा हिमकरवदना सर्व-दैत्येन्द्र-हर्त्री ।
वागीशी सिद्धि-कर्त्री सकल-मुनि-जनैः, सेविता या भवानी,
नौम्यहं नौम्यहं त्वां हरि-हर-प्रणतां, शारिकां
नौमि नौमि (5)

उद्यत्-दिवाकर-सहस्र-रुचिं त्रिनेत्रां,
पद्मा-सनोपरिगताम्-उरगोपवीताम् ।
खड्गाम्बुजाड्य-कलशाऽमृतपात्र-हस्तां
राज्ञीं भजामि विकसत्-वदानार-बिन्दाम् ।।

ज्वाला-पर्वत-संस्थितां त्रिनयनां, पीठ-त्रयाधिष्ठितां
ज्वाला-डम्बर-भूषितां, सुवदनां नित्याम्-अदृश्यां जनैः ।
षट् चक्राम्बुज-मध्यगां वरगदाम्भोज-भयान्-बिभ्रतीं
चित्‌रूपां सकलार्थ-दीपन करीं ज्वाला-मुखीं नौम्यहम् ।।

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजन-प्रभवस्य-लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम् ।

ॐ लीलारब्ध-स्थापित-लुप्ताखिल-लोकां, लोकातीतै-र्योगिभिर्-अन्तर्हृदि-मृग्याम् बालादित्य-श्रेणि-समान-द्युतिपुञ्जां गौरीम्- अम्बाम्-अम्बु-रुहा-क्षीम्-अहम्-ईडे (1)

आशापाश-क्लेशविनाशं विदधानां पादम्भोज-ध्यान- पराणां पुरुषाणाम् । ईशीम्-ईशाङ्गार्ध हरां तां तनुमध्यां गौरीम्-अम्बाम्- अम्बु-रुहा-क्षीम्-अहम्-ईडे (2)

प्रत्याहार-ध्यान-समाधि-स्थितिभाजां नित्यं चित्ते निर्वृत्ति-काष्ठां कलयन्तीम् । सत्य-ज्ञानानन्दमयीं तां तडित्- आभाम्-गौरीम्-अम्बाम्-अम्बु-रुहा-क्षीम्-अहम्-ईडे (3)

चन्द्रापीडा-नन्दितमन्द-स्मितवक्त्रां, चन्द्रपीडा-लंकृतलोलालकभाराम् । इन्द्रोपेन्द्रा-द्यर्चितपादाम्बु-जयुग्मां गौरीम्-अम्बाम्-अम्बु-रुहा-क्षीम्-अहम्-ईडे (4)

नानाकारैः शक्ति-कदम्बै-र्भुवनानि, व्याप्य स्वैरं क्रीडति यासौ स्वयमेका कलयाणीं तां कल्पलताम्-आनतिभाजां, गौरीम्-अम्बाम्- अम्बु-रुहा-क्षीम्-अहम्-ईडे (5)

मूलाधारात्-उत्थितवन्तीं विधि-रन्ध्रं, सौरं चान्द्रं धाम-विहाय-ज्वलितांगीम् । स्थूलां सूक्ष्मां सूक्ष्मतरां तामृभिवन्द्याम् गौरीम्-अम्बाम्-अम्बुरुहाक्षीम्-अहम्-इडे (6)

आदिक्षान्ताम्-अक्षर मूर्त्या विलसन्तीं भूते भूते भूतकदम्बं प्रसवित्रीम् । शब्द-ब्रह्मा-नन्द-मयीं ताम्-अभिरामां, गौरीम्-अम्बाम्- अम्बु-रुहा-क्षीम्-अहम्-ईडे (7)

यस्याः कुक्षौ लीनम्-अखण्डं, जगत्-अण्डं भूयो भूयः प्रादुर्-अभूत्-अक्षतमेव । भर्त्रा सार्धं तां स्फटिकाद्रौ, विहरन्तीं गौरीम्-अम्बाम्- अम्बु-रुहा-क्षीम्-अहम्-ईडे (8)

यस्याम्-एतत्प्रोतम्-अशेषं मणिमाला, सूत्रे यत्-वत्-क्वापि चरं चाप्यचरं च । तामऽध्यात्मज्ञानपदव्या गमनीयां गौरीम्-अम्बाम्- अम्बु-रुहा- क्षीम्-अहम्-ईडे (9)

नित्यः सत्यो निष्कल एको जदीशः साक्षी यस्याः सर्गविधौ सहंरणे च । विश्वत्राण-क्रीडण शीलां शिवपत्नीं गौरीम्-अम्बाम्- अम्बु-रुहा-क्षीम्-अहम्-ईडे (10)

पूजा काले भावविशुद्धिं विदधानो भक्त्या नित्यं जल्पति गौरीदशकं यः । वाचां सिद्धिं सम्पतिम्-उच्चैः शिवभक्तिं तस्या-वश्यं पर्वत-पुत्री विदधाति ।

इति गौरीस्तुतिः



## मानसिक शान्ति देने वाला मन्त्र

ॐ नमः शम्भवाय च मयो भवाय च
नमः शंकराय च मयस्कराय च
नमः शिवाय च शिवतराय च ।

हमारे सभी प्रकाशन तथा प्रेमनाथ शास्त्री की ज़बान से भरे हुये कैसट्स निम्नलिखित स्थानों से मिल सकते हैं।

**D.P.B. PUBLICATION**
110, Chawri Bazar, Delhi
Ph : 3273220

**तनेजा इल्कट्रनिक्स एण्ड टैन्ट हाऊस**
अमर कालोनी, लाजपतनगर, देहली
फोन : 6429046

**SH. S.N. RAINA**
303/9 Sect. Faridabad
Ph : 8-282805, 8-282806, 8-282807

**SH. C.L. KAUL**
104, Mukti Kalyan Complex
Yari-Road, Andheri (West) Mumbai-400061
Ph : 6293887, 6295479

**विजयेश्वर धार्मिक पुस्तक भण्डार**
तालाब तिलो जम्मू, फोन : 555763

**J.K. BOOK SHOP**
Talab Tillo Jammu
Ph : 554522 (PP)

**यूनिवर्सल न्यूज़ एजेन्सी**

मुकर्जी बाजार, उधमपुर